## అనుబంధము-3

श्रीः

# कुमारसम्भवमहाकाव्यम्

## (आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपंजिकायां)

## पञ्चमः सर्गः

अद्भुतं रतिकामोदन्तमाख्यायेदानीं देवीवृत्तं वर्णयितुमाह —

१. तथेत्यादि ॥ अथ (पार्वती) गौरी हृदयेन चेतसा रूपं रामणीयकं निनिन्द जगर्ह। घिगू मदीयं रूपं येन हरो वशी नाकारि । यतः (पिनाकिना) शम्भुना तथा पूर्वोक्तप्रकारेण समक्षमेव (मनोभवं) कामं (दहता) प्लुष्यता (भग्नमनोरथा) भग्नो नाशितः 'शिवो मे भर्ता भूयात्' इति मनोरथो यस्या सा तथोक्ता । किमित्येवता रूपं निन्दितवती । हि यस्मात् चारुता (प्रियेषु) भर्तुषु सौभाग्यफला पियविषये सौभाग्यं वाल्लभ्यमेव फलं यस्याः सा । वल्लभा यदि भवस्य भवेत् ततः कथमसौ मदनं दहेत् । या च न सुभगा तस्याः किं रूपेण। लावण्यसौभाग्ययोः स्वरूपमाह –

सज्जल्पन - सन्निरीक्षण - सद्गमनानीति वदन्ति लावण्यम् ।
स्पृहणीयो रतसुभगः स्पर्शगुणो भवति सौभाग्यम् ॥ ॥ १ ॥

२. इयेषेत्यादि ॥ ततोऽसौ समाधिम् आस्थाय आश्रित्य तपोभिरात्मनः अवन्ध्यरूपतां सफलरम्यत्वं (कर्तुं) विधातुम् (इयेष) अचकमत । न चेतदद्भुतम्। यतः अन्यथा तपसा विना (तथाविधं) तादृशं देहार्धदाननिदानं प्रेम तादृशः





चतुर्दशभुवनाधिपतिः पतिः भगवान् महेश्वर इति कथम् एतत् द्वयम् (अवाप्यते) समासाद्यते, अपि तु न । यतस्तपोमूलमिष्टपदवी । तदुक्तम् —

यद्दूरं यद्दुराराध्यं यच्च दूरे व्यवस्थितम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥

वाशब्दः पूर्वोक्तापेक्षया । तादृशतथाविधशब्दौ सामान्यार्थावपि विशेषणयोरुत्कृष्टत्वेन प्रसिद्धत्वाद्विशेषणातिशयनिष्ठावेव ॥ २ ॥

३. निशम्येत्यादि ॥ (सुतां) दुहितरं गिरीशं ईश्वरं प्रति सक्तमानसाम् आरोपितचित्तामाहितान्तःकरणां सतीं (तपसे तपोऽर्थ (कृतोद्यमां) विहितोद्योगां निशम्य श्रुत्वा मेना वक्षसा हृदयेन च (परिरभ्य) आलिंग्य सुताम् उवाच । किं कुर्वती । महतः गरीयसो दुश्चरात् मुनिव्रताम् जपनियमाम् निवारयन्ती निषेधयन्ती। व्रतं शास्त्रविहितो नियमः ॥ ३ ॥

४. मनीषिता इत्यादि ॥ (वत्से) हे पुत्रि । यदि तदर्थं च तपस्पसितदलं, यतः (गृहे अपि) निजवेश्मन्येव (मनीषिताः) वाञ्छिताः (अभिमताः) देवताः देवाः सन्ति । अतश्च क्लेशाम्तकं क्व तपः । क्व च सुकुमारं तावकं त्वदीयं (वपुः) शरीरम् । तदेव दृष्टान्तेन दृढयति । पेलवं सुकुमारं शिरीषपुष्पं (भ्रमरस्य) षट्पदस्य पदम् अवस्थानम् (सहेत) सोढुं शक्नुयात् न (पुनः) तु (पतत्रिणः) शुकादेः पक्षिणः। मनीषितमभिप्रेतं यथा- 'मनीषितं द्यौरपि येन दुग्धा' (रघु. ५-३३) इति ॥ ४ ॥

५. इतीति ॥ श्रुतेच्छां तपोविषये श्रुता इच्छाऽभिलाषो यस्यास्तां श्रुतेच्छां ज्ञाताशयां (सुतां) दुहितरम् (इति) इत्थम् अनुशासती उपदिशन्त्यपि मेना उद्यमात् उत्साहात् नियन्तुं न शशाक । अतः (ईप्सितार्थस्थिरनिश्चयं) ईप्सितेऽर्थे स्थिरो दृढो निश्चयो व्यवसायो यस्य तत् तादृशं मनः कः प्रतीपयेत् व्यावर्तयेत्। प्रतीकरोतीति प्रतीपयति निम्नाभिमुखम् अधः प्रसृतं पयः तोयमिव ॥ ५ ॥

६. कदाचिदित्यादि ।। ततः (कदाचित्) कतिपयकालापगमेऽसौ (आसन्न सखीमुखेन) निकटवयस्याद्वारेण (पितरं) जनकम् आत्मनः (अरण्यनिवासं) वनावस्थानम् (अयाचत) प्रार्थयत । किमर्थम् (फलोदयान्ताय) ईश्वराराधनमेव फलं तस्योदय उत्पत्तिः स एव (अन्त) उदयान्तो यस्य तस्मै तादृशाय (तपः - समाधये) तपोऽर्थं समाधये नियमार्थम् । मनोरथज्ञम् इत्यनुज्ञासम्पत्तिं ब्रूत इति। यो ह्यभिलाषत्वरां न वेत्ति नासावनुजानाति । (मनास्विनी) तेजोऽहङ्कारादि भिर्वासितं मनो यस्याः सा मनस्विनी मानिनी । सख्योः समक्षं पराभवं नासहतेति भावः। 'अस्मायामेधास्रजो विनिः' (पा. सू. ५-२-१२१) इति विनिः प्रत्ययः। 'तसौ मत्वर्थे' (पा.सू. १-४-१९) इति भत्वाद्रुत्वाभावः।। ६ ।।

७. अथानुरूपेत्यादि ।। (अथ) पितृप्रार्थनानन्तरं ततः (गौरी) देवी (शिखरं) शृङ्गमद्रिशिखरं तपोऽर्थं (जगाम) अयासीत् । यतः गरीयसा पूज्येन गुरुणा पित्रा (कृताभ्यनुज्ञा) दत्तानुमता । तेनैव दृष्करे कर्मणि कथमनुज्ञातेति चेदिदमाह – (अनुरूपाभिनिवेशतोषिणा) योग्याग्रहतुष्टेन 'स्थानेऽस्या अभिनिवेशो यातु हराराधनाय' इत्येवं 'धन्योऽहम्' इति विचिन्त्य हृष्टः। किं शिखरमित्याह- गौरीशिखरम् इति । शिखण्डिमत् सदा मयूरयुतमिति रम्यत्वोक्तिः।। ७ ।।

८. विमुच्येत्यादि ।। (अहार्यनिश्चया) तपस्यहार्यो हर्तुमशक्यो निश्चयो यस्याः सा गौरी (हारं) मुक्ताहारं (विमुच्य) अपास्य तदास्पदे (वल्कलं) वल्कलचीरं (बबन्ध) दध्रे । कीदृशं हारम् । (विलोलयष्टिप्रविलप्तचन्दनं) क्रीडाकम्पानुबन्धा- द्विलोलया चटुलया यष्ट्या, तदा प्रविलुप्तं उत्पुंसितं चन्दनरागं येन स तं (बबन्ध) दध्रे । (बालारुणबभ्रु) नवोदितारुणकपिशं भूर्जत्वचम् । तथा (पयोधरोत्सेधविशीर्णसंहति) स्तनोच्छ्रयेण त्रुटितं सन्धिबन्धं यस्य तत् ।। ८ ।।

९. यथा प्रसिद्धैरिति ।। (तत्) गौर्याः (आननम्) मुखं प्रसिद्धः अलंकृतैः (शिरोरुहैः) केशैः कृष्णकोमलकुटिलप्रलम्बनीरन्ध्रैः यथा (मधुरं) मनोज्ञम् (एवं) तथैव जटाभिः अपि (अभूत्) बभूव । तथाहि (पंकजं) कमलं (न केवलं



षट्पदश्रेणिभिः) भ्रमरावलिभिः एव (प्रकाशते) शोभते यावत् (सशेवलासङ्गं) शेवालसम्पर्केणापि । सह शेवला संगेन वर्तते यत्तच्छशेवलासंगम् ।। ९ ।।

१०. प्रतिक्षणमित्यादि।। (प्रतिक्षणं) मुहुर्मुहुर्विहिततपस्विवेषा सा (व्रताय) व्रतार्थं त्रिगुणां मौञ्जीं मेखलां (बभार) उवाह । तया तस्याः (रशनागुणास्पदं) काञ्चीगुणस्थानं सरागं लोहितम् अकारि व्यधायि । यतः (तत्पूर्वनिबद्धया) तत्पूर्वं तदादि निबद्धया । अतश्च नितम्बस्य सौकुमार्यात् मौञ्ज्याश्च पारुष्याद्रक्त -त्वादानम् ।। १० ।।

११. विसृष्टरागादित्यादि ।। तया अधरात् कन्दुकात् च (करः) पाणिः (निवर्तितः) निषिद्धः अक्षसूत्र प्रणयी व्यसनी (कृतः) विदधे । इदानीं तस्योचितत्वात् । आदौ त्वसौ रागोत्पादनाय ओष्ठासक्तालक्तकः आसीत् । क्रीडार्थं च कन्दुके । कीदृशादधरात् । (विसृष्टरागात्) विसृष्टस्त्यक्तः उपेक्षितो रागोऽलक्तकादिर्येन यस्य वा । रज्यतेऽनेनेति रागः। कन्दुकात् (स्तनाङ्गरागा- रुणितात्) स्तनाङ्गरागेण कुचकुङ्कुमेनाऽरुणितादिति प्रियत्वोक्तिः । कीदृशः करः। (कुशाङ्कुरादानपरिक्षताङ्गुलिः) कुशाङ्कुरादानेन दर्भसूचीग्रहणेन परिक्षताङ्गुलिः पाटितकरशाखः। प्रीतिर्विद्यते यस्याऽसौ प्रणयी ।। ११ ।।

१२. महार्हेत्यादि ।। या देवी पूर्वं (महार्हशय्यापरिवर्तनच्युतैः) उत्कृष्टशयन चलनपतितैः। (स्वकेशपुष्पैः) निजकबरीकुसुमैः अपि दूयते स्म अखिद्यत। (सा) असौ तदा (बाहुलतोपधायिनी) भुजलतामुपधानीकृत्य निषेदुषी निषण्णा उपविष्टैव हस्तमूलं भूमावारोप्याऽवष्टभ्य, यतो योगनिद्रा समाधौ उपनिष्टैः क्रियते । केवले निरावरणे शाद्वलरहिते । स्थण्डिले स्थले एव (अशेत) अधः सुष्वाप । व्रतवशेन स्थण्डिलशयनस्योचितत्वात् । महानुत्कृष्टोऽर्हो योग्यो यस्याः सा महार्हा यद्वा बहुधना । बाहुलतामुपधाति शिरसि करोतीति बाहुलतोपधायिनी। दूयते स्म इति 'लट् स्मे' (पा.सू. ३-२-११८) ।। १२ ।।

१३. पुनर्ग्रहीतुमित्यादि ॥ तया गोर्या (नियमस्थया) ब्रतस्थया निकटवर्तिषु (द्वयेषु) उभयेषु द्वयम् इदं निक्षेपम् इव न्यासमिव (पुनर्ग्रहीतुं) पुनरादातुम् अर्पितं निहितम् । केषु किमित्याह-तन्वीषु लतासु (विलासचेष्टितं) विभ्रमपरिभ्रमणं। (विलोलदृष्टं) चटुलं च वीक्षितं (हरिणाङ्गनासु) मृगीषु । विशेष्यस्य स्त्रीत्वेऽपि द्वयेष्विति सामान्योपक्रमादस्त्रीलिङ्गेन निर्देशः। निक्षिप्यत इति निक्षेपः। द्वयविशेषणत्वान्नपुंसकत्वम् । एतदेव (च) दर्शयितुं लतास्वित्यादि द्वयमित्येकावयवापेक्षया एकवचनम् ॥ १३ ॥

१४. अतन्द्रितेत्यादि ॥ सा देवी (अतन्द्रिता) अनलसा सती वृक्षकान् अल्पतरून् (घटस्तनप्रस्रवणैः) कलशकुचपयोभिः (स्वयमेव) आत्मनैव (व्यवर्धयत्) पुपोष। येषां (प्रथमाप्तजन्मनां) पूर्वलब्धजन्मत्वात् (गुहः) कुमारः अपि (पुत्रवात्सल्यं) पुत्रस्नेहं न अपकरिष्यति । पूर्वजातो हि मातृप्रियः । पुत्रश्च स्तनप्रस्रवणेन पोष्यते। अल्पा ह्रस्वा वा वृक्षाः वृक्षकाः। तन्द्रा आलस्यम् । तारकादित्वादितच्॥

१५. अरण्येयादि ॥ (अरण्यबीजाञ्जलिदानललिताः) अरण्यबीजानि नीवारादिव्रीहयस्तेषा मुष्टिभिः पोषिताः हरिणाः तथा तेन प्रकारेण (तस्याः) गौर्या विशश्वसुः विश्वासमाययुर्विश्रम्भमापुः । यथा तदीयैः (नयनैः) नेत्रैरसौ (कुतूहलात्) (पुरः) अग्रतः सखीनां (लोचने) लोचनानि अमिमीत पर्यच्छिदत् कस्य विशालानीलि । नेत्र मानमत्र सखीनां न त्वात्मनस्तपःस्थाया अनौचित्यात् । अमिमीतेति माङ्गो लङ् । भृञामित् (पा.सू.७-४-७६) इह न्याय्याः ॥ १५ ॥

१६. कृताभिषेकामित्यादि ॥ तां एवंविधां (दिदृक्षवः) दृष्टुं (ऋषयः) वृद्धमुनयः अपि (उपागमन्) आययुः। कीदृशीम् । (कृताभिषेकां) त्रिकालविहितस्नानां हुतजातवेदसं कृताग्निकार्याम्। (त्वगुत्तरासंगवतीं) वल्कलोत्तरीयवतीम् (अधीतिनीम्) अधीतं विद्यते यस्यास्तामधीतिनीं कृतस्वाध्यायाम् । ननु चिरन्त-





नास्ते कथं तां बालां द्रष्टुमाजग्मुरित्याह - (धर्मवृद्धेषु) सुकृतसम्भारोन्नतेषु वयः न (समीक्ष्यते) ईक्ष्यते । तदुक्तम् –

न तेन वृद्धो भवति येनाऽस्य पलितं शिरः।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः।। (-मनु.२-१५६)

१७. विरोधीत्यादि ॥ तत् देव्याः तपोवनं (पावनं) पवित्रं (बभूव) आसीत् । कीदृशम् (विरोधिसत्त्वोज्झितपूर्वमत्सरम्) अहिमयूरादिभिर्विरोधिभिः सत्त्वैः प्राणिभिः त्यक्तशाश्वतिकपूर्ववैरम् । यदुक्तम् – (अहिंसाप्रतिष्ठायां) 'तत्सन्निधौ वैरत्यागः' (पातञ्जलयोगसूत्रम् २-३५) इति । तथा आस्तां सचेतनाः। स्थावरैः (द्रुमैः) तरुभिः अपि (इष्टप्रसवार्चितातिथि) प्रियैः पुष्पफलैः पूजितागन्तुकम्। (नवोटजाभ्यन्तरसंभृतानलं) पर्णगृहमध्ये सञ्चिताग्निम् ॥ १७ ॥

१८. यदा फलमित्यादि ॥ यदा असौ (काङ्क्षितं) अभिमतं फलं (सर्वतपः समाधिना) अखिलनियमाधानत्वात् तावता परिमितेन तपसा (न लभ्यं) दुर्लभम् अमंस्त अज्ञासीत्, तदा (स्वशरीरमार्दवं) निजवपुःसौकुमार्यम् (अनपेक्ष्य) अवगणण्य्यैव (महत् तपः) कष्टानि व्रतानि । (चरितुं) कर्तुं (प्रचक्रमे) आरेभे। लब्धुं शक्यं लभ्यम् ॥ १८ ॥

१९. क्लमं ययावित्यादि ॥ या देवी (कन्दुकलीलया) क्रीडया अपि (क्लमं) खेदं (ययौ) जगाम । तया तीव्रतपश्चर्यया कठिनकायानां (मुनीनाम्) ऋषीणां (चरितं) चेष्टितं व्यगाह्यत पस्पृशे । अतश्चोत्प्रेक्षते तदीयं (वपुः) शरीरं (ध्रुवं) निश्चितं काञ्चनपद्मनिर्मितम् । यत् (प्रकृत्या) स्वभावेन मृदु अथ च सुसारं दृढं क्लेशसहम् । कनककमलं हि सौवर्णत्वात् दृढं पद्मत्वान्मृदु ॥ १९ ॥

२०. शुचावित्यादि ॥ (शुचौ) आषाढे मासि (ज्वलतां) देदीप्यमानानां चतुर्णां (हविर्भुजां) अग्निनां (मध्यगता) मध्यस्था सती देवी (नेत्रप्रतिघातिनीं) नयननाशिनीं (प्रभाम्) अर्कदीप्तिं (विजित्य) परिभूय (अनन्यदृष्टिः) तद्गतदृष्टिः (सवितारं)

सूर्यम् (ऐक्षत) अद्राक्षीदिति पञ्चाग्नितपःसाधना कथिता । शुचिस्मिता निर्मलहसितेति अल्कान्तित्वकथनम् ॥ २० ॥

२१. तथापीत्यादि ॥ तथा तेन प्रकारेण (सवितुः गभस्तिभिः) रविरश्मिभिः तप्तम् अपि (तदीयं मुखं) देवीवक्त्रं (कमलश्रियं) नलिनलक्ष्मीं (दधौ) उवाह। कमलं हि तपनतापाद् विकसति । केवलम् अस्य (अपाङ्गयोः) नेत्रप्रान्तयोः (शनैः शनैः) क्रमात् (श्यामिकया) कालिम्ना पदं कृतम् । अतिसौकुमार्यात्॥२१॥

२२. अयाचितेत्यादि ॥ तस्याः देव्याः पारणाविधिः शरीरयात्रासम्पत्तिः (वृक्षवृत्तिव्यतिरिक्तसाधनः) वृक्षवृत्तेर्व्यतिरिक्तसाधनोऽधिकोपकरणो न (बभूव) आसीत् । तरुवृत्तितुल्यो बभूव । तथा हि (अयाचितोपस्थितम्) अप्रार्थितोपनतम् (अम्बु) तोयं केवलम् अस्याः पारणम् । (रसात्मकः) अमृतमयः (उडुपतेः) मयूखाः च । द्रुमाणामप्यम्बु शीतांशुरश्मयश्च जीवितम् । किल इत्यागमे ॥२२॥

२३. निकामतप्तेत्यादि ॥ सा देवी रविकाष्ठजभेदात् द्विविधेन द्विरूपेण (वह्निना) अग्निना पूर्वं (निकामतप्ता) ग्लपिता सती ततः तपात्यये धर्मान्ते (नवैः) प्रथमैः (वारिभिः) जलैः (उक्षिता) सिक्ता भूरिव (ऊर्ध्वगम्) ऊर्ध्वप्रवृत्तम् (उष्माणं) बाष्पम् (अमुञ्चत्) मुमुचे प्रानिःश्वसत् । कथं (भुवा) उर्व्या सह । पृथिवी हि दावाग्निना अर्केण च तापिता ततो मेघजलसिक्ता उष्माणं मुञ्चति॥२३॥

२४. स्थिताः क्षणमित्यादि ॥ तस्याः गोर्याः प्रथमोदबिन्दवः प्रथमप्रवृत्ता उदबिन्दवो जलकणाः चिरेण (नाभिं) नाभिस्थानं (प्रपेदिरे) प्रापुः। तथा हि पूर्व (क्षणं) क्षणमात्रं पक्ष्मसु अक्षिलोमसु स्थिताः विनम्रनयनत्वान्नाधः पतिताः ॥ ततः ताडिताधाराः । ततोऽपि (पयोधरोत्सेधनिपातचूर्णिताः) स्तनोच्छ्रयेण स्तनपातेन चूर्णिताः। तदनु नमितत्वात् (वलीषु) वलित्रयमध्ये स्खलिताः। अनन्तरं नाभौ मग्नाः । तदनेन प्रथमप्रावृट्स्वरूपं कथयता देव्या रूपातिशयः सूचितः । उदकस्य बिन्दवः उदबिन्दवः। 'मन्थौदन -....' (पा.सू. ६-३-६०) इत्यादिना उदादेशः। उत्सेध उच्छ्रायः॥ २४ ॥



२५. शिलाशयामित्यादि ॥ तां पार्वतीं क्षपाः निशाः (तडिन्मयैः) विद्युद्रूपैः उन्मिषितैः व्यलोकयन् ददृशुः। उत्प्रेक्षते महातपः (साक्ष्यः) साक्षित्वे स्थिताः इव । साक्षी ह्यसकृत्पश्यति । कीदृशीं ताम् । (शिलाशयां) शिलायां शेते इति शिलशया तां दृषदि संवेशिनीम् । स्थण्डिले हि तदा पङ्कसद्भावः। (अनिकेतवासिनीं) बहिरेव स्थायिनीम् । कदा । निरन्तरासु अखण्डितासु अन्तरवर्षवृष्टिषु अन्तरे मध्ये वर्षं जलमयं यासां तासु वृष्टिसु करकारूपासु सतीषु, अशनिवर्षेषु पतत्स्वित्यर्थः । एवं हि तपसो महत्त्वं भवति । वर्षवृष्टिशब्दयोरेकार्थयोः प्रयोगादत्र विशेषोऽवसेयः। साक्षिणो भावः कर्म वा साक्ष्यम् ॥ २५ ॥

२६. निनाय सेत्यादि ॥ सा गौरी सहस्य रात्रिः पौषनिशा अतिशीतला (उदवासतत्परा) जलवासतत्परा सती निनाय अत्यवाहयत् । कीदृशीः। (अत्यर्थहिमोत्तरानिलाः) अत्यर्थ हिमोत्तरस्तुषारा धिकोऽनिलो वायुर्यासु ताः। उत्तराशब्द आधिक्यं ब्रुवाणः संमिश्रत्वमाह । यथा-'कम्पोत्तरं भीरु तवोपगूढम्' (रघु.१३-२८) इत्यादि । कृपावती सदया, स्वयं वियोगव्यथानुभावात् । (पुरः) अग्रतः वियुक्ते विश्लिष्टे (चक्रवाकयोः) रथाङ्गयुगले कृपावती विश्लेषवशात्। परस्पराक्रन्दिनि कूजिनि । एकस्थानस्थितयोर्हि तयोरन्योन्याऽदर्शनमेव वियोगः। उदके वासः उदवासः, उदवासे तत्परा । शरद्वसन्तयोरनुष्णशीतत्वान्न तयोः वर्णनम्, शिशिरेऽपि हेमन्तेनैकयोगक्षेमः॥ २६ ॥

२७. मुखेन सेत्यादि ॥ (तुषारवृष्टिक्षतपद्मसंपदां) हिमसेकेन दग्धाब्जादीनाम् (अपां) वारीणाम् । सा देवी तोयन्तःस्था । (पद्मसुगन्धिना) कमलसुरभिणा (मुखेन) वक्त्रेण (सरोजसंधानम् इव) जलजसन्धानमिव अकरोत् पद्मरचनामिव व्यधत्त । पद्मे हि पलाशैर्भाव्यम् । तत्तु (प्रवेपमानाधरपत्रशोभिना) प्रवेपमानः कम्पमानो जाड्यवशाद् योऽसावधरस्तेनैव पत्रेण शोभते । निशि इति तदाप्यत्यागो जलमध्ये प्रतिपाद्यते । 'पद्दन्नोमास्हृन्निश ...' (पा.सू. ६-१-६३) इत्यादिना निशायाः निशादेशः॥ २७ ॥

२८. स्वयमित्यादि ॥ तपसः एषा परा काष्ठा कोटिर्यत् (स्वयंविशीर्ण-द्रुमपर्णवृत्तिता) आत्मना पतितेन तरुपत्रेण वृत्तिः शरीरयात्रा क्रियते । तया पुनः तु तदपि अपाकीर्णं त्यक्तं तदा तां प्रियंवदां प्रियभाषिणीम् अपर्णां पुराविदः चिरन्तनाः वदन्ति। न भुक्तं पर्णमपि ययेति कृत्वा गौर्या अपर्णेति नाम । यदुक्तम् - 'अपर्णा चैकपर्णा च तथा स्यादेकपाटला' इति । अपर्णामिति कथं द्वितीया। इदि शब्देन हि प्रतिपदिकार्थमात्रेऽ वस्थापनात् प्रथमया भवितुं न्याय्यम् । यथा- 'क्रमादमुं नारद इत्यबोधि सः' (शिशु. १-३) इति चिन्त्यमेतत् । यदि वेतिशब्देन पुराविदां सम्बन्धो न त्वपर्णास्तां देवीमपर्णामतो वदन्ति इति पुराविद आहुरित्यर्थः॥२८॥

२९. मृणालिकेत्यादि ॥ एवमादिभिः पञ्चाग्निप्रभृतिभिः (व्रतैः) तपोभिः मृणालिकापेलवं बिशसुकुमारम् (अहर्निशं) दिवारात्रं (स्वं) निजम् (अङ्गं) वपुः (ग्लपयन्ती) क्लेशयन्ती देवी (तपस्विनां) वृद्धमुनीनां (कठिनैः) कठोरैः (शरीरैः) देहैः (उपार्जितं) सञ्चितं तपः दूरम् अत्यन्तम् अधश्चकार जिगाय । पेलवशब्दः केषाञ्चिन्मते न्याय्यो न सर्वेषाम् ॥२९॥

३०. अथाजिनेत्यादि॥ (अथ) ततः कदाचित् जटिलः विप्रः (तपोवनं) गौर्याश्रमं (विवेश) आययौ । कीदृशः (अजिनाषाढधरः) अजिनं मृगचर्म, आषाढः पलाशदण्डस्तौ बिभर्ति यः। (प्रगल्भवाक्) प्रगल्भा वाचाला वाग् यस्य (ब्रह्ममयेन तेजसा) ब्राह्म्या कान्त्या (ज्वलन् इव) देदीप्यमान इव । अतश्चोत्प्रेक्षते - शरीरबद्ध देहवान् प्रथमाश्रमः यथा ब्रह्मचारीव ॥३०॥

३१. तमातिथेयीत्यादि ॥ तं विप्रं (पार्वती) गौरी (बहुमानपूर्वया) गौरवपुरः-सरया (सपर्यया) अर्चया (प्रत्युदियाय) प्रत्युज्जगाम पूजार्थमग्रत आयया वित्यर्थः। यतोऽसौ (आतिथेयी) परिचरणचतुरा । ननु साऽपि स्वयं तपस्विन्येव, नैतस्मादूना



तत् कोऽस्यास्तदर्चां प्रति भर इत्याहयतः निविष्टचेतसां निरहङ्कारमनसां साम्येऽपि सति वपुर्विशेषेषु रूपातिशयेषु (अधिगौरवाः क्रियाः) सबहुमानचेष्टाः प्रसरन्ति । आडम्बराणि किल पूज्यानि । स चाजिनादियुक्तत्वात् वेषवान् । केचित्तु साम्येऽपि समदृष्टत्वेऽपीति किलाहुः । कण्ड्वादिषु सपरशब्दस्य (धा. पा. १९६८) पाठात्सपर्येति यक् प्रत्ययात् ॥ ३१ ॥

३२. विधिप्रयुक्तामित्यादि ॥ ततः (स) असौ जटी (विधिप्रयुक्तां) सम्यक्कल्पितां (सत्क्रियाम्) अर्चां (प्रतिगृह्य) आदाय (क्षणं) किञ्चित् च (परिश्रमं) विनीय विश्रम्य (वक्तुं) गदितुं (प्रचक्रमे) प्रारेभे । अनुज्झितक्रमः आश्रितपरिपाटीकः वक्तव्यस्य सक्रमाभिधानात् । रागद्वेषरहितत्वात् ऋजुना एव स्पष्टेनैव (चक्षुषा) नेत्रेण (उमां) देवीं पश्यन् । अनन्तरं किलाऽसौ क्रोधं रागं च दर्शयिष्यति ॥३२॥

३३. अपि क्रियार्थमित्यादि ॥ अपि इतीष्टप्रश्ने । (क्रियार्थं) होमार्थं कच्चित् (ते) तव (समित्कुशम्) इन्धनदर्भादि (सुलभं) सुप्रापम् (अपि) च (जलानि) तोयानि (स्नानविधिक्षमाणि) विषाद्यदूषितत्वादभिषेकयोग्यानि (अपि) कच्चिच्च (स्वशक्त्या) देहसामर्थ्यमवेक्ष्य (तपसि) प्रवर्तसे व्रतानि कुरुषे न तु मूढाग्रहेण । यस्मात् (आद्यं) मुख्यतः शरीरं धर्मसाधनम् । यदुक्तम् —

शरीरं धर्मसंयुक्तं रक्षणीयं प्रयत्नतः।
शरीराज्जायते धर्मः पर्वतात् सलिलं यथा ॥

तस्माद्धर्माधारमेतत् । समिधश्च कुशाश्च समित्कुशम् । 'जातिरप्राणिनाम्। (पा.सू. २-४-६) ।

३४. अपि त्वदित्यादि ॥ (अपि) कच्चित् आसां वीरुधां लतानां त्वद्दत्तोदकसंभृतां (प्रवालं) किसलयम् अनुबन्धि सफलं वर्तते । किंभूतम् । (त्वदावर्जितवारिसंभृतं) त्वया क्षिप्तेन पानीयेन संभृतं प्रवृद्धम् । (चिरोज्झितालक्तकपाटलेन)

बहुकालत्यक्तालक्तकेनाऽपि पाटलेन (ते) त्वदीयेन दन्तवाससा दशनाच्छादनेन यत् तुलां साम्यम् आरोहति स्पृशति । द्वयोरपि स्वभावलोहितत्वात् । अथ चिरात्परित्यक्तेऽपि अलक्तके पाटलस्ताम्रः । अनुबध्नात्युत्पद्यत इत्यनुबन्धि॥३४॥

३५. अपि प्रसन्नमित्यादि॥ (अपि) कच्चित् (ते) तव हरिणेषु मनः प्रसन्नं प्रीतिम् स्थितम् । कुतोऽप्रसादशङ्केत्याह --- (करस्थदर्भप्रणयापराधिषु) त्वत्पाणितलवर्तिकुशापहारेणापराधिषु कृतागस्सु । तथा ह्यसहनीयत्वे कारणमाह -ये च मृगाः (विलोकितैः) वीक्षणैः (तवाक्षिसापत्न्यं) त्वदक्ष्णोः सापत्न्यं वैरं स्पर्धामिव (प्रयुञ्जते) कुर्वते चटुलत्वात् । कीदृशैः (उत्पलक्षेपचलैः) उत्पलानां क्षेपः प्रेरणं तद्वच्चलैः । क्षिप्यमानस्य कुवलयस्य कम्पानुबन्धादतितरां शोभा भवति । आक्षेपस्त्वपपाठ एव । न चापि सुरम्यपक्षमारूढं 'य उत्पाक्षेपचलैः' पाठः॥ ३५ ॥

३६. यदुच्यत इत्यादि॥ हे पार्वति । यत् इदं लक्षणज्ञैः उच्यते ज्ञातं यत् (पापवृत्तये) पापा चाऽसौ वृत्तिराचारः पापवृत्तिस्तदर्थं रूपं न भवति । 'यत्राकृति-स्तत्र गुणाः वसन्ति'। तत् इदानीं (वचः) वचनम् अव्यभिचारि सत्यम् । कुत इत्याह – तथा हि (ते) तव शीलम् (उदारदर्शने) विपुलनयने (तपस्विनां) मुनीनाम् अपि (उपदेशतां) शिष्यकत्वं (गतं) सम्पन्नम् । धर्मिष्ठा अपि हि त्वदीयं चरितं शिष्यन्ते इत्यर्थः। यदि च रूपवन्तो दुःशीलाः स्युस्तत्र भवती धर्मपरा न स्यात् । तस्यास्तु रूपवत्त्वमुदारनयनत्वेनैवाक्षिप्तम् ॥ ३६ ॥

३७. विकीर्णसप्तर्षीत्यादि॥ एष स (महीधरः) हिमवान् (सान्वयः) सपुत्रपौत्रः यथा त्वदीयैः अनाविलैः (चरित्रैः) चेष्टितैः (पावितः) पवित्रीकृतः न तथा । दिवश्च्युतैः स्वर्गपतितैः सुरसैन्धवैरपि (सलिलैः) निर्मलैरुदकैः। गङ्गा हि नाकात्तच्छिरसि पतिता । (विकीर्णसप्तर्षिबलिप्रहासिभिः) विकीर्णो विक्षिप्तो यः सप्तर्षिभिः पुष्पादिको बलिरुपहारस्तेन प्रहासिभिः, सितत्वात्स्मयमानै रिव॥३७॥



३८. अनेनेत्यादि ॥ हे भामिनि । भा विद्यते यस्याः (इति भामिनी), मानिनी। आदौ सारत्वेन ज्ञातोऽपि (सविशेषम्) अद्य (त्रिवर्गसारः) त्रिवर्गस्य धर्मार्थ-कामलक्षणस्य धर्मः सार उत्कृष्टः मे (प्रतिभाति) प्रतिभासते । यत् त्वया (निर्विषयार्थकामया) अर्थकामावनादृत्य स एक एव (प्रतिगृह्य) अङ्गीकृत्य सेव्यते। यदि ह्यसौ सर्वोत्कृष्टो न स्यात्तत्कथं भवती धर्मार्थिनी तपस्येदिति ॥३८॥

३९. प्रयुक्तेत्यादि ॥ हे (सन्नतगात्रि) । नतांगि । मां परम् अन्यं संप्रतिपत्तुं बोद्धुं न अर्हसि । यतः (प्रयुक्तसत्कारविशेषम्) आत्मना स्वयमेव न त्वन्यमुखेन प्रयुक्तः पूजातिशयो यस्य स तम् । योऽप्यात्मनाऽर्चितः स किमेतावता नान्यत्वमित्याह — यतः (सतां) साधूनां संगतं सख्यं (मनीषिभिः) बुधैः साप्तपदीन मुच्यते । येन सह सप्तपदान्युच्चारितानि स सखेत्यर्थः। यदुक्तम्--- 'सम्बन्धमाभाषणपूर्वमाहुः' (रघु.२-५) इति । आवयोश्चालापं जातमेव ॥३९ ॥

४०. अतोऽत्रेत्यादि ॥ अतः सखिभावात् अत्र तपसि किञ्चित् भवतीं कर्मतापन्नं बहुक्षमां कदर्थनासहां (अयं जनः) अहं (प्रष्टुमनाः) प्रष्टुकामः। द्विजातिभावात् ब्राह्मण्यात् (उपपन्नचापलः) उपपन्नं सुलभं चापलं यस्य । बटुकौतुकादहं पृच्छामीत्यर्थः । (चेत्) यदि चैतत् न रहस्यं न गोप्यं तत् (प्रतिवक्तुं) प्रतीपं कथयितुम् अर्हसि । यतो बहुक्षमा त्वम् । 'इक्षिक्षमिभ्यां च' इति णः। प्रष्टु मनो यस्य स प्रष्टुमनाः। तुं काममनसोरपि (इति मलोपः) ॥ ४० ॥

४१. कुले प्रसूतिरित्यादि ॥ (वद) कथय अतः (परम्) अधिकं तपःफलं किं (स्यात्) भवेत् । यत् यत्तपसाऽर्थनीयं तत्सर्वं तवास्तीत्यर्थः। तथाहि — प्रथमस्य वेधसः शम्भोः कुले (प्रसूतिः) जन्म । हरनिर्माणं हि हिमवानित्यागमः। तथा च भारविः — 'प्रथयितुं विभुतामभिनिर्मितं प्रतिनिधिं जगतामिव शम्भुना। (किरात. ५-३) अन्ये त्वाहुः – प्रथमो विधाता ब्रह्मा प्रजापतिर्वा तस्य तोकमपत्यम् । 'प्रथमं परतः पर्वतः' इति श्रुतेः । वपुः च ते मूर्तिः। (त्रिलोकसौन्दर्यम् उदितं)

त्रिलोकसौन्दर्यपुञ्जितम् (इव)। एश्वर्यसुखम् अपि (अमृग्यम्) अप्रार्थनीयं, पर्वतराजपुत्रीत्वात् । वयः अपि नवं प्राप्तयौवनत्वात्, अतश्च तपःफलं स्यात्किमतः परं वद ॥ ४१ ॥

४२. भवत्यनिष्टेत्यादि ॥ अपि च (मनस्विनीनां) मानिनीनां दुःसहात् अनिष्टात् वैधव्यलक्षणाद् इद्दशी प्रतिपत्ति अनुष्ठानं तपश्चर्यालक्षणं भवति। तथा हे (कृशोदरि) कृशमध्ये । तत् अनिष्टं (त्वयि) तव (विचारमार्गपहितेन) विवेकपदवीनिक्षिप्तेन चेतसा न दृश्यते ॥ ४२ ॥

४३. अलभ्यशोकेत्यादि ॥ (अलभ्यशोकाभिभवेयमाकृतिः) अलभ्योऽनर्हः शोकेन क्लान्तिर्यस्याः सा तादृशी इयम् आकृतिः संस्थानम् । अस्यां हि आकृतौ वैधव्यं न योग्यम् । परिभवादपि वैराग्यं स्यात् । तदपि तव न सर्वमस्तीत्याह – पितुः गृहे सुभ्रु कुतः (विमानना) अवगणना (पराभिमर्शः) परकृतोऽप्यविमर्शो विध्वं-समङ्गस्पर्शः तव न अस्ति । शत्रुभूतेन केनचित् पराभवार्थं भवती कदाचिदपि न संस्पृष्टेत्यर्थः। यस्मात् (पन्नगरत्नसूचये) उरगस्य मणिशलाकाग्रहणाय कः (करं) पाणिं (प्रसारयेत्) न हि त्वत्परिभवकृत्स्वस्थो भवति । सुभ्रुशब्दो ह्रस्वः प्रमादजो नदींसंज्ञानिषेधात् ॥ ४३ ॥

४४. किमितीत्यादि ॥ इतश्च (किं) कस्मात् (यौवने) तारुण्ये एव (आभरणानि) अलंकारान् (अपास्य) अपहाय (वार्द्धकशोभि वल्कलम्) स्थविरोचितवल्कलं चीरं (त्वया) भवत्या (धृतं) गृहीतम् । यत्किल चतुर्थे वयसि योग्यं तद् यौवनेऽनुचितम् । यद्येवं न स्यात् तर्हि कथं (स्फुटचन्द्रतारका) प्रकटशशिनक्षत्रा (विभावरी) निशा यदि अरुणाय कल्पते लौहित्येन परिणमति । अरुणो ह्यसौ प्रभाते भवति । अरुणशब्दोऽत्रान्तर्भावितभावार्थः। वल्कलस्य च रक्तत्वात्तदुपमानम्। 'क्लृपि स्मपद्यमाने च' इति चतुर्थी । आभरणानां चन्द्रतारका उपमानम् । वृद्धस्य भावो वार्धम् यौवनत्वादण् । वार्धमेव वृद्धकम् । केचिच्च मनोज्ञादिषु वृद्धशब्दं पठन्ति । केचिदस्फुटतारका इति पठन्ति । उदयमात्रत्वादस्फुटता



तत्रैवं प्रथममुदयमानाश्चन्द्रतारका भविष्यदलंकारभागभूता अपास्य कथमन्त्यवयस्तुल्याऽरुणोदयोचिता अलंकाराः स्युः॥ ४४ ॥

४५. दिवं यदीत्यादि ॥ (दिवं) स्वर्गं (यदि) चेत् तपसा (प्रार्थयसे) अभिलषसि (वृथा) तन्निरर्थकोऽयं (श्रमः) क्लेशः । यतः (तव) त्वत् (पितुः प्रदेशाः) पितृप्रदेशा एव (देवभूमयः) सुरपुरम् । अथ (उपयन्तारं) भतरि वाञ्छसि तत् अलं समाधिना मा नियमं कृथाः । यतः रत्नं न गृहीतारम् अन्विष्यति गवेषयति अपि तु हठात् तत् अन्येन मृग्यते अर्थ्यते । एवं त्वमर्थनीया न तु त्वमर्थयसे । उपयच्छत इत्युपयन्ता पतिः। अलं समाधिना इति प्रकृत्यादित्वात् तृतीया, चतुर्थीविधौ तु पर्याप्त्यर्थस्याऽलमेव ग्रहणम् ॥ ४५ ॥

४६. निवेदितमित्यादि ॥ (सौष्मणा) उष्णेन (निःश्वसितेन) निःश्वासेन मे सूचितं यथा पतिमभिलषसीति । तथापि (मे) मम (मनः) चेतः (संशयं गाहते) संशेते । यतः (प्रार्थयितव्यः) काम्यः अत एव न ते (दृश्यते) समोऽस्ति । (कथं) पुनः (प्रार्थितदुर्लभः) अर्थितो दुष्पापः (भविष्यति) स्यात् । तव स्त्रीरत्नत्वादिति भावः। प्रार्थयितव्य इति कृत्यप्रत्ययः ॥ ४६ ॥

४७. अहो स्थिर इत्यादि ॥ अहो चित्रं कः अपि स्थिरः ध्रुवः क्रूरः (युवा) तरुणः (तव ईप्सितः) आप्तुमिष्टः । यः तव (कर्णोत्पलशून्यताम्) अवतंसोत्पल हिनत्वं (गते) प्राप्ते कपोले (इलथलम्बिनीः) शिथिलबन्धवशात् असमाना जटाः उपेक्षते । न समारचयति । (कलमाग्रपिङ्गलाः) कलमाख्यः शालिस्तस्याग्रं किंशारुः कणिशं तद्वत् पिङ्गलाः कपिलाः स्नेहाभावात् ॥ ४७ ॥

४८. मुनिव्रतैरित्यादि ॥ (मुनिव्रतैः) मुनिव्रतानि कृच्छ्रचान्द्रायणादीनि तैः (अतिमात्रं) अत्यर्थं (कर्शितां) तनूकृतां त्वां (दिवा) दिने (शशाङ्कलेखां) शशिकलाम् इव (पश्यतः) अवलोकयतः कस्य (सचेतसः) सहृदयस्य मनः न (दूयते) स्फुटति । तेन त्वद्दर्शनान्मम चित्तपीडेति भावः। (दिवाकराप्लुष्ट-

विभूषणास्पदाम्) रविणा दग्धान्यतिसौकुमार्यादलंकारस्थानि यस्यास्ताम् । प्लुषेरुदितः प्लुष्टमिति रूपम् । दीर्यत इति कर्मकर्तरि ॥ ४८ ॥

४९. अवैमि सौभाग्यमदेत्यादि ॥ तव प्रियं वल्लभं (सौभाग्यमदेन) गर्वेण वञ्चितं विप्रलब्धम् (अवैमि) अवगच्छामि । यतः त्वदीयस्य अस्य (चक्षुषः) नेत्रस्य आत्मीयं (वक्त्रं) मुखं सन्निधानेन (लक्ष्यं) लक्ष्यभूतं न करोति । यं त्वं नेक्षस इत्यर्थः। भवदीयदर्शनेन हि तस्य जन्मनः साफल्यम् । कीदृशस्य चक्षुषः। चतुरावलोकिनः मधुरदर्शिनः, चतुरं किञ्चिदुच्छवासान्मधुरायतता भ्रुवोः। अत एव अरालपक्ष्मणः नतरोम्णः अधोदृष्टित्वात् ॥ ४९ ॥

५०. कियच्चिरमित्यादि ॥ हे गौरि । कियत् (चिरं) कालं श्राम्यसि । कुतः कालादारभ्य तपश्चरसि । यदि वा कियदधिकं चिरकालं तपस्यसीत्यर्थः। मम अपि तावत् (पूर्वाश्रमसंचितं) ब्रह्मचर्यार्जितम् तपोऽस्ति । तद् (अर्धभागेन) अर्धांशेन त्वं (काङ्क्षितम्) अभिलषितं शोभनं वरं (लभस्व) आप्नुहीत्याशीः । तं च तद् वरं साधु सम्यक् (वेदितुं) ज्ञातुम् इच्छामि । योग्यश्चेत् तदनुमन्यत इति भावः। अर्धश्चासौ भागोऽर्धभागः॥ ५० ॥

५१. इति प्रविश्येत्यादि । (इति) इत्थं (द्विजन्मना) द्विजेन प्रविश्य अन्तर्भूय (अभिहिता) उक्ता (सा) असौ शालीनत्वात् (मनोगतम्) अभिप्रायं (शंसितुम्) वक्तुं न (शशाक) अशकत् (अथो) अथानन्तरं कथनार्थं (परिपार्श्ववर्तिनीं) निकटस्थां (वयस्यां) सखीम् ऐक्षत अदर्शयत् प्रेरयामास । कथम् । (विवर्तितानञ्जननेत्रं) विवर्तितं चलितमनञ्जनं नेत्रं यत्र । कथय त्वमस्येति, अक्षिनिकोचेनालीमचोदय दित्यर्थः। पार्श्वमेव परिपार्श्वम् ॥ ५१ ॥

५२. सखी तदीयेत्यादि ॥ ततः (तदीया) देव्याः सखी वर्णिनं विप्रम् (उवाच) अवोचदित्यर्थः। हे साधो । (निबोध) श‍ृणु यदि (चेत्) कुतूहलं कौतुकम् यदर्थम् (एतया) अनया (अम्भोजं) सरोरुहम् इव उष्णवारणम् आतपत्रं तपःसाधनं





घ्रतनिर्वर्तकं वपुः (कृतं) विहितम् । यथैवाब्जस्यातपवारणात्कदर्थना तथैव तत्कायस्य तपश्चरणादित्यर्थः ॥ ५२ ॥

५३. इयं महेन्द्रेत्यादि ॥ (इन्द्रप्रभृतीन्) इन्द्रवरुणधनदयमान् (अधिश्रियः) अधिलक्ष्मीकान् (चतुर्दिगीशान्) ककुप्चतुष्टयप्रभून् (अवमत्य) अनपेक्ष्य इयं किल (मानिनी) मनस्विनी साभिनवरूपधारिणी (पिनाकपाणिं) हरम् (इच्छति) लिप्सते प्रियतमम् । एवंविधा अपि कथं तेन परित्यक्तेत्याह — (मदनस्य) स्मरस्य (निग्रहात्) दाहात् (अरूपहार्यं) रूपसौन्दर्येण हर्तुमशक्यम् । यदि ह्यसौ रूपवश्यः स्यान्न तदेतन्निमित्तं कामं दहेत् । हरजिगीषोन्मुखत्वमस्या मानिनीति पदेनाह ॥ ४३ ॥

५४. असह्ययेत्यादि ॥ (पुरा) पूर्वं (पुष्पधन्वनः शिलीमुखः) पुष्पेषुणा हरमुद्दिश्य यः सायकः प्रहितः स स्मरारिम् (अप्राप्तमुखः) अप्राप्तमुखत्त्वात् इमाम् एव प्रत्युत हृदि अक्षिणोत् जघान । यतः शम्भुना (असह्यहुंकारनिवर्तितः) दुर्जयेन हुंकारास्त्रेण निवर्तितः पराङ्मुखीकृतः। विशीर्णमूर्तेः अपि दग्धवपुषोऽपि सायकक्षेपानुपदमेव ह्यसौ हरेणादाहि । (व्यायतपातं) दीर्घप्रवेशम् । (अप्राप्तमुखः) न प्राप्तं मुखं यस्यासावप्राप्तमुखः । प्राप्तमिति कर्तरि । स्मरारिमिति गुणक्रियापेक्षा द्वितीया । यथा - 'कृतपूर्वी कटं, भुक्तपूर्वी ओदनाम्' इति । पुष्पैः पुष्पाणि वा धनुर्यस्य स पुष्पधन्वा 'धनुषश्च' । (पा.सू. ५-४-१३२) इत्यनङ्ङादेशः ॥५४॥

५५. ततः प्रभृतीत्यादि ॥ ततः (प्रभृति) आरभ्यासौ स्मरव्यथिताङ्गत्वात् (तुषारसंघातशिलातलेषु) तुहिननिकरदृषत्पट्टेषु अपि निर्वृतिं सौख्यं न (जातु) कदाचित् (लभते) लेभे । (ललाटिकाचन्दनधूसरालका) सन्तापविच्छित्तये ऽलंकारविच्छित्या ललाटे निहितं चन्दनं तेन धूसरा अलका मलिनकुन्तला 'कर्णललाटात्कनलङ्कारे' (पा.सू. ४-३-६५) । हिमसमूहे दृषत्पट्टेष्ववि । उक्तं च 'तलस्ताले च पट्टे च तलं चाऽधः स्वरूपयोः'॥ ५५ ॥

५६. उपात्तेत्यादि ॥ (वनान्तसंगीतसखीः) वनान्ते उपवने संगीतसखीः

गुणनिकायालीः (किन्नरराजकन्यकाः) गान्धर्वराजपुत्री किन्नरीः (इयम्) एषा विरहार्ता (अनेकशः) असकृत् अरोदयत् । कैः (सबाष्पकण्ठस्खलितैः पदैः) सबाष्पे कण्ठे स्खलितैः पदैर्वचोभिः । कदा । पिनाकिनः चरिते त्रिपुरवधावदाने उपात्तवर्णे वर्णीकृते गीयमानेऽतश्च प्रियस्यैवं चरिते कीर्त्यमाने द्विगुणतररसा विर्भावादस्त्रोत्पत्त्या वचसामस्पष्टता । सखीनां च कारुण्यादनुरोदनम् । वर्णा गेयशास्त्रप्रसिद्धाः स्थाय्यारोहादयः ।। ५६ ।।

५७. त्रिभागेत्यादि ।। (त्रिभागशेषासु) चतुर्थे यामे सा एषा कथमपि (क्षणं) क्षत्रमात्रं निद्रावशात् (नेत्रे) अक्षिणी (निमिल्य) संकोच्य (सहसा) झटिति (व्यबुध्यत) प्रबुद्धा उन्निदद्रौ । क्व (नीलकण्ठ) प्रियतम व्रजसि इति (अलक्ष्यवाक्) अस्फुटं वदन्ती (असत्यकण्ठार्पितबाहुबन्धना) असत्येऽपारमार्थिके कण्ठेऽर्पितं बाहुबन्धनं भुजपाशो यया । स्वप्ने ह्येतया स एवागतो दृष्टः।। ५७ ।।

५८. यतो बुधैरित्यादि ।। एतया मुग्धया चित्रे (स्वहस्तालिखितः) स्वयमालिख्य (चन्द्रशेखरः) शशिमौलिः (इति) इत्थम् उपलभ्यत सासूयमगद्यत, उपालम्भो दत्तः। कथमित्याह-यतः (बधैः) मनीषिभिः त्वं सर्वगतः सर्वव्यापी (उच्यसे) कथ्यसे । अस्मिन्नालेख्येऽपि त्वमेव तिष्ठसीति स्मयः। तदा इमं जनं भावस्थं भक्तं रागिणं कथं न (वेत्सि) जानासि । व्यसनिनीम् इमां विज्ञाय परित्राणं युक्तं तवेत्यर्थः । भावो वासना तत्र तिष्ठतीति भावस्थम् । इमम् इति आत्मनिर्देशेन एवमुपालम्भोऽन्यत्र वाच्यते ।। ५८ ।।

५९. यदा च तस्येत्यादि ।। तस्य विश्वेश्वरस्य हरस्य (अधिगमे) प्राप्तौ यदा च असौ वीक्ष्यमाणाऽपि (अन्यं विधिम्) उपायान्तरं (न अपश्यत्) नैक्षिष्ट, न दृष्टवती, विचिन्वती गवेषयन्ती तदा (गुरोः) पितु (अनुज्ञया) निदेशात् अस्माभिः (सह) साकं (तपसे) तपोऽर्थं (तपोवनम्) आश्रमं (प्रपन्ना) प्राप्ता । यतः 'पुण्यैर्विना न हि भवन्ति समीहितार्थाः' ।। ५९ ।।





६०. द्रुमेषु सख्येत्यादि ।। अनया स्वयं (कृतजन्मसु) रोपितेषु (द्रुमेषु) वृक्षेषु फलम् अपि बद्धमुत्पन्नम् । अस्याः तु (शशिमौलिसंश्रयः) शिवालम्बनो यः मनोरथः सः (प्ररोहाभिमुखः) अङ्कुरावस्थ अपि न (दृश्यते) लक्ष्यते । तपः साक्षिषु द्रष्टृषु एतेषां पूर्वरोपितत्वात् ।। ६० ।।

६१. न वेद्मीत्यादि ।। अतश्च न (वेद्मि) जाने स (प्रार्थितदुर्लभः) प्रार्थितोऽपि दुर्लभः कदा इमां सखीं (तपःकृशां) नियमदुर्बलाम् अत एव सखीभिः आलीभिः (अस्राकुलं) बाष्पगर्भम् (ईक्षितां) दृष्टाम् अभ्युपपत्स्यते प्ररित्रास्यते । वृषा शक्रः (इव) यथा सीतां क्षेत्रवनिं (तदवग्रहक्षतात्) अनावृष्टिबाधितां दृष्ट्वा वृष्ट्या अभ्युपपत्स्यते । तस्येन्द्रस्यावग्रहस्तदवग्रहः वर्षप्रतिबन्धस्तेन क्षतां पीडिताम् । तपसा कृशां तपःकृशाम् । 'ओजःसहोऽम्भसा वर्तते ।' (पा.सू. ४-४-२७) इति तृतीया ।। ६१ ।।

६२. अगूढेत्यादि ।। अथ तया इङ्गितज्ञया अभिप्रायविदा सख्या अगूढसद्भावं प्रकटिततरमर्थं (निवेदिते) आख्याते सति स नैष्ठिकसुन्दरः वर्णी (उमां) गौरीम् (अपृच्छत्) अप्राक्षीत् । किमित्याह । यदेतया अपि इदम् एव सत्यमुत परिहासः नर्म । द्वितीयप्रश्नाभावेऽपि पात्रवशात् तदर्थप्रतीतिः। यथा 'देवः किं बान्धवः स्यात्' इति । अत्र नैष्ठिको व्रती स चाऽसौ सुन्दरः सुभगो नैषिठकत्वं तद्वेषपरिग्रहात् सुन्दरत्वं तस्यैव प्रार्थ्यमानत्वात् । (अव्यञ्जित हर्षलक्षणः) अव्यञ्जितहर्षलक्षणानि रोमाञ्चादीनि येन स तथोक्तः । व्रतसुभगो निष्ठावान् नैष्ठिकः। आत्मसौभाग्याकर्णनेन हि तेषामुत्पत्तिर्युक्ता ।। ६२ ।।

६३. अथग्रहस्त इत्यादि ।। (अथ) ततः (अन्द्रेः तनया) पार्वती (कथंचित्) कृच्छ्रेण (मिताक्षरं) परिमितं (अभाषत) अब्रवीत् । कीदृशी । मुकुलीकृतांगुलौ संकुचितकरशाखे पाण्यग्रे (स्फटिकाक्षमण्डलम्) सितमणिगुलिकावलयं समर्पयन्ती योजयन्ती लज्ज्ञानुभावोऽयमत्र । तथा (चिरव्यवस्थपितवाक्) चिरेण क्लेशवशात् त्रपाभरात् व्यवस्थापिता उद्यमिता वाग्यया ।। ६३ ।।

६४. यथा श्रुतमित्यादि ॥ (वेदविदां वर) हे द्विजोत्तम । यथा त्वया श्रुतं तथैवेतत् । यतः अयं जनः (उच्चैः पदलङ्घनोत्सुकः) उन्नतस्थानक्रमणप्रवणः वर्तते । कुत इत्याह । इदं किल तपः (तदवाप्तिसाधनं) हरलाभनिवर्तकम् । न चाऽनेन तपसा स सुलभ इति किलशब्दः सूचयति । यदि न प्राप्यते किं क्लेशेनेत्याह । मनोरथानाम् अगतिः अविषयो नाम न क्वचित् (विद्यते) अस्ति। आशा हि सर्वत्र प्रेरयति । तदवाप्तीति लज्जावशात् सर्वनामनिर्देशः । यथा श्रुतग्रहणात्तुविशेषप्रतीतिः। यथा श्रुतमित्येतद्विषादे ॥ ६४ ॥

६५. अथाहेत्यादि ॥ (अथ) ततः पुनः (वर्णी) ब्रह्मचारी (आह) जगाद । किमित्याह । विदितः महेश्वरः जानामि यथास्वरूपं तमित्यर्थः। महेश्वरः इत्युल्लुण्ठनापदम् । कोपगर्भमाह । पुनः अपि (त्वं) भवती तदर्थिनी वर्तसे । कामदाहप्राक् किल तदर्थिनी भूत्वा तादृशं च परिभवनुभूयऽद्याऽपि भूयस्तमेव प्रार्थयसे । येन पुरा कामं दहता त्वन्मानभंगः स्फुटः कृतः । स्यादेवं तु पुनरहम् (अनुवृत्तिम्) अनुमतिं कर्तुं न (उत्सहे) शक्नोमि अनुचितत्वात् । यतः (अमङ्गलाभ्यासरतिम्) अमङ्गलाभ्यासे श्मशानवासादिके रतिरासक्तिर्यस्य, तादृशं तं त्वत्पतिं विचिन्त्य । न ह्यसावुचितस्ते पत्तिः ॥ ६५ ॥

६६. अवस्तुनिर्बन्धेत्यादि ॥ तावदिदं विचारय (अवस्तुनिर्बन्धपरे) हरप्रार्थनयाऽस्थाने निर्बन्धः आदरः कथं (ते) तव अयम् (आमुक्तविवाहकौतुकः करः) बद्धोद्वाहकंकणपाणिः (शंभोः) हरस्य (वलयीकृताहिना) कटकीकृतोरगेण (भुजेन) बाहुना तत्प्रथमं तदादि अवलम्बनं ग्रहणं कथ सहिष्यते । स हि सर्पाभरणः॥६६॥

६७. त्वमेव तावदित्यादि ॥ आस्तामन्यः त्वम् एव इदं (परिचिन्तय) विचिन्तय। यदि (सहंसलक्षणं वधूदुकूलं) रोचनालिखितहंसाङ्कितपतिंवरापट्टस्य (शोणितबिन्दु -वर्षि) रुधिरकणमुचः (गजाजिनं) करिचर्मणः (योगं) योगः सम्बन्धः योग्यः। भगवान् हि करिकृत्तिवसनः ॥ ६७ ॥



६८. चतुष्कपुष्पेत्यादि ॥ तव पादयोः (अलक्तकाङ्कानि) यावकचिह्नानि पदानि (विकीर्णकेशासु) शबकेशव्याप्तासु (परेतभूमिषु) स्मशानस्थलीषु प्रेतावनिषु (परः) शत्रुः अपि कः (अनुमंस्यते) अनुज्ञास्यति । कदाचित् तद्योग्यावेव तौ चरणौ स्यातामित्याह । (चतुष्कपुष्पप्रसरावकीर्णयोः) चतुष्को वेश्मविशेषश्चतुःशाला तत्र यः पुष्पप्रकारस्तत्राऽवकीर्णयोर्विक्षिप्तयोः । एवं यो यावकरञ्जितौ वासवेश्म-कुसुमोपचारसञ्चारणौ तयोः शबकेशास्थिकपालमालामालितासु प्रेतावनिषु चङ्क्रमणानुमतिविषये कस्य दुष्टस्याऽपि मतिः स्फुरति ॥ ६८ ॥

६९. अयुक्तरूपमित्यादि ॥ अतश्चान्यत्कथय । किं (अयुक्तरूपम् असाम्प्रतं) (त्रिनेत्रवक्षः) यदीशानोरसि निहितः (चिताभस्मरजः) शिवभूतिरेणुः तवापि अस्मिन् (हरिचन्दनास्पदे) दिव्यानुलेपनोचिते (स्तनद्वये) कुचयुगले (पदं करिष्यति) स्थास्यति । आश्लेषवशाद्धि तत्र संचरति ॥ ६९ ॥

७०. इयं चेत्यादि । इयं च (ते) तव (पुरतः) अग्रतः प्रथमतः विडम्बना उपहासता स्थितैव । यत् त्वया ऊढया उद्वाहितया हरवाहनं (वृद्धोक्षं) जरन्दवम् (अधष्ठितम्) आरूढं (विलोक्य) आलोक्य (महाजनः) साधुलोकः अपि (स्मेरमुखः) प्रहसितमुखः (भविष्यति) सम्पत्स्यते । कदाचित् तद्योग्यैव सा स्यादित्याह । (वारणराजहार्यया) हस्तिमल्लोद्वहनयोग्यया । तव हीन्द्रेणोढ्या द्विपेन्द्रेण गन्तुं न्याय्यम् । वृद्धश्चासावुक्षा च वृद्धोक्षः। अचतुरादित्वादच्॥७०॥

७१. द्वयं गतमित्यादि ॥ पशुपा (पिनाकिनः) समागमप्रार्थनया पशुपतिसंश्लेषा-भिलाषेण (संप्रति) अधुना (द्वयम्) उभयं (शोचनीयतां) शोच्यत्वं दीनत्वं (गतं) प्राप्तम् । किं तत् । (कलावतः) शशिनः (कान्तिमती) कान्तियुता सा कला (लोकस्य) जनस्य नेत्रकौमुदीत्वं च । कलावतः इत्युल्लुष्ठनापदम् । स किल कलावन् विदग्धः ॥ ६१ ॥

६२. वपुर्विरूपेत्यादि ॥ (बालमृगाक्षि) हे शिशुहरिणनयने वरेषु कन्यामार्गणकेषु रूपकुलधनादिकं यत् (मृग्यते) निरीक्ष्यते तत् समस्तमास्ताम् व्यस्तम् अपि

एकमपि किं (त्रिलोचने) हरे विद्यते । नैवास्ति । तथा हि वपुः तावदस्य (विरूपाक्षं) श्यामलपिङ्गलत्वाद् भीषणनेत्रम् । ननु कदाचित् स महाकूलप्रसूतप्रसिद्धो भविष्यति तत्किं शरीरलावण्येन तदपि नास्तीत्याह । (अलक्ष्यजन्मता) जन्मताऽपि न लक्ष्यते कुतो जात इति । एवमपि यदि स निखिलगुणसिद्धिसंसाधक इत्याधारो भवेत् , तत्किं कुलरूपादिना, तदपि नैवास्तीत्याह । (वसु) धनमपि दिगम्बरत्वेन नग्नतया (निवेदितं) सूचितम् । यदुक्तम् – 'कूलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च । एतान् गुणान् सप्त निरीक्ष्य कन्या देया बुधैः शेषमचिन्तनीयम् ।' — पञ्चतन्त्रम् ३-२०९ ॥ ७२ ॥

७३. निवर्तयाऽस्मादिति ॥ यत एवमतः (अस्मात्) अपर्यालोचितात् मनः चेतः निवर्तय पराङ्मुखीकुरु । (असदीप्सितात्) अनिष्टाभिलाषात् । यस्मात् (तद्विधः) पूर्वोक्तविधाः प्रकारा यस्य तद्विधो दुर्भगः क्व असौ । क्व च त्वं पुण्यलक्षणा प्रशस्तचिह्ना । अनुचितो युवयोः संयोग इत्यर्थः। एतदेव दृष्टान्तेन द्रढयति । साधुजनः द्विजलोकः श्मशानशूलस्य प्रेतस्थानचौरनिग्रहस्तम्भस्य (वैदिकीं) वेदोक्तां यूपसत्क्रियां न अपेक्षते नार्थयते । न हि यज्ञयूपस्य यः संस्कारः स चौरशूलस्य केनचित् कोविदेन क्रियते । त्वं च यदि तेन सहात्मानं सम्बन्धयसि तदासौ संस्कृतो भवति ॥ ७३ ॥

७४. इति द्विजातावित्यादि ॥ तस्मिन् (द्विजातौ) वर्णिनि (इति) इत्थं (प्रतिकूलवादिनि) अप्रियभाषिणि (तया) गौर्या (विकुञ्चितभ्रूलतं) भ्रूभङ्गं विधाय (उपान्तलोहिते) रोषरक्तपाङ्गे (विलोचने) नेत्रे तिर्यग् साचि आहिते क्षिप्ते । गौरवे हि कोपात् न संमुखावलोकनम् । (प्रवेपमानाधरलक्ष्यकोपया) प्रवेपमानाभ्यामधराभ्यां लक्ष्यः कोपो यस्याः । रुषा ह्योष्ठकम्पः । विकुञ्चिते कुटिलीकृते भ्रूलते यस्मिन् ॥ ७४ ॥



७५. उवाच चैनमित्यादि ॥ एवं च (एनं) विप्रमसौ (उवाच) जगाद । किमित्याह। (परमार्थतः) तत्त्वतस्तं (हरं) शिवं नूनं न (वेत्सि) बुध्यसे । यतः एवं रूक्षं कूटं त्वम् (आत्थ) आह मां ब्रवीषि । यस्मात् ये मन्दाः अज्ञास्ते (महात्मनां) महतां (चरितं) चेष्टितम् (अलोकसामान्यं) सर्वविलक्षणं अचिन्त्यहेतुकं च अज्ञेयनिदानं च द्विषन्ति निन्दन्ति । यदि त्वं प्राज्ञः विदितपरमार्थः स्यात्तदा नैवं ब्रूयाः॥७५॥

७६. विपत्प्रतीकारेत्यादि ॥ इह द्वाभ्यां मङ्गलं निषेव्यते आसेव्यते (विपत्प्रतीकारपरेण) व्याध्याद्यनर्थनाशेच्छुना (भूतिसमुत्सुकेन) विभवोत्कण्ठितेन च । अतस्तस्य (जगच्छरण्यस्य) जगतां शरण्यस्यार्तिहरस्य विपन्न सम्भाव्यते। यश्च परिपूर्णत्वात् (निराशिषः) निराशीः निष्कामः। स कामिविविभूतिमप्राप्तां कामयताम् । जगच्छरण्यस्य विपद्विषवल्लयाः स्वयमकुण्ठाग्रधोरधारकुठारत्वादन्यानार्तिहरस्य किमेभिर्मङ्गलैः। (आशोपहतमात्मवृत्तिभिः) आशया उपहता निन्दिता आत्मवृत्तिः स्वरूपं येषां तैः। आशाचाल्पचेतसाम् । मङ्गलमित्येकवचनेन निर्दिश्य एभिरिति बहुत्वं निर्देशो युक्तो न वेति बुधाः प्रमाणम् । सामान्यनिर्देशो वैभिरिति । शृणाति भयमिति शरण्यस्त्राता । यदि वा शृ शरणे रक्षायां साधु शरण्यः ॥ ७६ ॥

७७. अकिञ्चन इत्यादि ॥ (पिनाकिनः) शर्वस्य यथात्म्यविदः यथास्वरूपज्ञा न सन्ति न विद्यन्ते । तथा हि अकिञ्चनः अपि निर्विभवोऽपि स सम्पदामैश्वर्याणां प्रभवः कारणम् । निराशीर्दरिद्रश्चाकिञ्चनः । तथा (पितृसद्मगोचरः) श्मशानवास्यपि स असौ लोकनाथः सप्तभुवनप्रभुः । (भीमरूपः) भैरवादिभीषणीयरूपोऽपि स असौ शिवः (इति उदीर्यते) उच्यते । यश्च भयानकः स कथं श्रेयस्करः स्यात् । अतश्च विरुद्धानेकरूपदर्शनात् न सन्ति यथात्म्यविदः पिनाकिनः ॥ ७७ ॥

७८. विभूषणोद्भासीत्यादि ॥ (विश्वमूर्तेः) विश्वरूपस्य सर्वात्मनो देवस्य वपुः एवंविधमेवेति न अवधार्यते न निश्चीयते। तथा हि विभूषणोद्भासि अलंकरणोद्भासुरं पिनद्धभोगि प्रोतोरगम् । विरुद्धोभयरूपमपि भवतीत्यर्थः। एवमुत्तरत्र । गजाजिनालम्बि करिकृत्तिधारि वा (दुकूलधारि) सुपट्टकूलांकितं वा (कपालि) कपालयुतं कपालमालामण्डितम् अथवा (चन्द्रशेखरं) शशिकोठिमुकुटम् । कदाचिदसावीक्ष्यते भीषणः कदाचिच्च सौम्यः। यतो विश्वमूर्तेरिति वाक्यार्थः। 'शम्भोर्बलयीकृताहिना' (कुमार. ५-६५) इति यदुक्तं तन्निराकृतम् । 'त्वमेव तावत्' (कुमार.५-६७) इत्यपि प्रत्युक्तम् ॥ ७८ ॥

७९ तदङ्गसंस्पर्शेत्यादि ॥ (तदङ्गसंस्पर्श) तस्य देवस्याङ्गसम्पर्कम् (अवाप्य) लब्ध्वा (ध्रुवं) निश्चितं चिताभस्मरजः अपि (विशुद्धये कल्पते) पवित्रं सम्पद्यते। कुत इत्याह। यथा हि (नृत्ताभिनयक्रियाच्युतं) नृत्ताभिनयः करचरणादिप्रयोगस्तस्य क्रिया करणं तद्वशात् करणकौशलबशात् पतितम् (अम्बरौकसां) नाकिनां (मौलिभिः) विलुप्यते। यदि वामङ्गलं स्यात्तत्कथमहंपूर्विकया शक्राद्या उत्तमाङ्गेन तद्बिभृयुः । एतदुपलक्षणम् ॥ ७९ ॥

८०. असम्पद इत्यादि ॥ तस्य देवस्य (वृषेण गच्छतः) वृषगामित्वात् असम्पदः जरद्गवधनस्य अपि वृषा शक्रः (पादौ) चरणौ (उपगम्य) आगत्य (मौलिना) शिरसा (विनिद्रमन्दाररजोरुणाङ्गुली) विकसितकुसुमपरागलोहिताङ्गुलीकः (करोति) विधते । तथा च —

दरिद्रस्य पराभूतिर्याच्ञा न द्रविणाल्पता ।
जरद्गवधनः शम्भुस्तथापि परमेश्वरः॥

एवमीदृशोऽपि यदि दरिद्रस्तदेवमस्तु। असम्पदः इति परमतापेक्षया। एतेन 'विलोक्य वृद्धोक्षम्' (कुमार. ५-६०) इति प्रत्युक्तम् । कीदृशी वृषा । (प्रभिन्नदिग्वारणवाहनः) प्रभिन्नः स्फुटितः गण्डगलित ऐरावणो वाहनं यस्य सः। उपगम्य द्विपेन्द्रादवरुह्य ॥ ८० ॥





८१. विवक्षता दोषमित्यादि ॥ (त्वया) भवता च्युतात्मना हरनिन्दावशाद् भ्रष्टचेतसा 'अलक्ष्यजन्मता' (कुमार. ५-७२) इति दोषम् अपि (विवक्षता) कथयता (शिवं प्रति) शिवोद्देशेन साधु भद्रम् एकं (भाषितम्) उक्तम् । यस्मात् यम् (आत्मभुवः) ब्रह्मणः अपि (कारणं) प्रभवम् आमनन्ति ।

'कामो ब्रह्मा ब्रह्म च ब्राह्मणाश्च त्वत् संभूतं स्थाणु चरिष्णुः चेदम्' (महा. ७-१२२-६८) इति स । देवः कथं लक्ष्यप्रभवः ज्ञातजन्मा भविष्यति । तस्मादजत्वं स्तुतिरेव ॥ ८१ ॥

८२. अलं विवादेनेत्यादि ॥ अथवा किमत्रोद्ग्राहणिकया । (त्वया) भवता (यथा) यादृशः (श्रुतः) अवगतः (तथाविधः) तादृशः (अशेषं) सर्वं सः असौ (अस्तु) भवतु । मन अत्र देवे (भावैकरसं) भावेन भक्त्या अनुरागेण एकरसम् एकरूपं मनः (स्थितं) अवस्थितम्, अनुरागमयमेव सम्पन्नम् । न त्वया व्यावर्तयितुं शक्यमित्यर्थः। यस्मात् कामवृत्तिः स्वेच्छाव्यवहृतिः न वचनीयं परवाच्यताम् ईक्षते । यदुक्तम् —

असद्ग्रहस्य का नीतिर्व्यसनस्य क्व यन्त्रणा ।
विपरीतार्थबोद्धारः सत्ये केन नियोजिता ॥
अशेषमिति क्रियाग्रहणम् ॥ ८२ ॥

८३,८४. निवार्यतामित्यादि ॥ इतो गमिष्यामीत्यादि ॥ (इति) इत्थं (वादिनी) ब्रुवाणा सा चचाल । (वृषराजकेतनः) देवः प्रत्यक्षीभूय (कृतस्मितः) स्मेरमुखः तां देवीं समाललम्बे अवाष्टभ्नात् । किं वदन्तीमित्याह । हे आलि सखि अयं बटुः विप्रशिशुः (निवार्यताम्) अपास्यताम् । यस्मादन्यमधिकं किमपि अवाच्यं विवक्षुः वक्तुकामः । यतः (स्फुरितोत्तराधरः) स्फुरितः कम्पित उपरितनोष्ठः। यदि वक्तुकामस्तत्कथं निवार्यत इत्याह । यस्मात् न केवलं यः महतः उत्तमान्

अपभाषते परिभाषते परिवदति स पापभाक् यः यो वाऽन्योऽपि तस्मात् निन्दकात् (शृणोति) आकर्णयते सोऽपि (पापभाक्) अपुण्यमाप्नोति । अथैव न निवर्तते तदहम् इतः अस्मात्स्थानात् (गमिष्यामि) यास्यामि । यदुक्तम् —

न वाच्यः परदोषो वै न श्रोतव्यः कदाचन ।
कर्णाविव पिधातव्यौ प्रस्थेयं वा ततोऽन्यतः।। (महा.१२-१३०-१२)

इति वादिनी जिगमिषयाऽसौ देवी यदैवोत्तस्थौ तदैव देवः स्वरूपम् (आस्थाय) प्रकटीकृत्य तां (समाललम्बे) आललम्बे । स्तनभिन्नवल्कला इति चित्तक्षोभप्रतिपादनपरं संस्पर्शवशाद्वा देहोच्छ्वासाद् वल्कलसन्धिबन्धत्रोटः।।८३।। ।।८४।।

८५. तं वीक्ष्येत्यादि ।। ततः तं देवं साक्षात् पार्वती (वीक्ष्य) दृष्ट्वा कम्पस्वेदान्विता सती न ययौ नाप्यस्थात् । यतः (निक्षेपणाय) निक्षेपणार्थं पदं उद्धृतम् एव (उद्वहन्ती) बिभ्रती । यदि ह्यसौ गच्छेत् तत्स्थानान्तरे पदं न्यसेत्। अथवा तिष्ठेत् तदुद्धरणमनर्थमिति तत्रैव तन्न्यसेत् । तत्रागमनं प्रस्तुतस्य तत्कारणस्याभावात् । अस्थानमप्यपूर्ववृत्तान्तावलोकनव्याकुलीभूतत्वादिति । (मार्गाचलव्यतिकराकुलिता) मार्गशैलसंम्पर्कविह्वला सिन्धुः नदी (इव) यथा प्रसररोधनात् न (ययौ) याति, न च (तस्थौ) तिष्ठति तद्वदसौ । तया हि निम्ने गन्तव्यम् ।। ८५ ।।

८६. अद्य प्रभृतीत्यादि ।। इति (वादिनि) ब्रुबाणे (चन्द्रमौलौ) शशिशेखरे अह्नाय तत्क्षणमेव सा नियमजं तपःसमुत्थं क्लमम् उत्ससर्ज ग्लानिं जहौ । किमित्याह । हे अनवमाङ्गि कल्याणगात्रि । अद्य (प्रभृति) आरभ्य अहं तव (तपोभिः क्रीतः) तपःक्रीतः दासः प्रेष्यः इति एवं भाषणात् । किमिति क्लमत्याग। इत्याह यस्मात् क्लेशः (फलेन) फले सति पुनः (नवतां) नवत्वं (विधत्ते)





बिभर्ति। फलदर्शनान्न तपः श्रम इत्यर्थः । क्लेशस्यैतदेव नवत्वं यदङ्ग्लान्याद्यभावः । अह्नायेति चतुर्थ्यन्तप्रतिरूपको निपातः। तत्क्षणार्थवृत्तिः। वसन्ततिलकावृत्तम् । अर्थान्तरन्यासोऽलंकारः । इति भद्रम् ।। ८६ ।।

**इत्यानन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां रतिविलापवर्णनो नाम पञ्चमः सर्गः समाप्तः।।**

**श्रीः**

## అనుబంధము-4

శ్రీః

# కుమారసంభవమహాకావ్యము

## పంచమసర్గలోని లోకోక్తులు

1. ప్రియేషు సౌభాగ్యఫలా హి చారుతా — 5-1
2. పదం సహేత భ్రమరస్య పేలవం
   శిరీషపుష్పం న పునః పతత్రిణః। — 5-4
3. క ఈప్సితార్థస్థిరనిశ్చయం మనః
   పయశ్చ నిమ్నాభిముఖం ప్రతీపయేత్ — 5-5
4. న షట్పదశ్రేణిభిరేవ పంకజం
   సశైవలాసంగమపి ప్రకాశతే। — 5-9
5. న ధర్మవృద్ధేషు వయః సమీక్ష్యతే — 5-16
6. భవన్తి సామ్యేఽపి నివిష్టచేతసాం
   వపుర్విశేషేష్వతిగౌరవాః క్రియాః। — 5-31
7. శరీరమాద్యం ఖలు ధర్మసాధనమ్ — 5-33
8. సంగతం మనీషిభిస్సాప్తపదీనముచ్యతే । — 5-39
9. కః కరం ప్రసారయేత్పన్నగరత్నసూచయే। — 5-43
10. విభావరీ యద్యరుణాయ కల్పతే । — 5-44
11. న రత్నమన్విష్యతి మృగ్యతే హి తత్। — 5-45





12. మనోరథానామగతిర్న విద్యతే — 5-64
13. అపేక్షతే సాధుజనేన వైదికీ
    శ్మశానశూలస్య న యూపసత్క్రియా। — 5-73
14. అలోకసామాన్యమచిన్త్యహేతుకం
    ద్విషన్తి మన్దాశ్చరితం మహాత్మనామ్। — 5-75
15. న సన్తి యాథార్థ్యవిదః పినాకినః। — 5-77
16. న విశ్వమూర్తేరవధార్యతే వపుః। — 5-78
17. న కామవృత్తిర్వచనీయమీక్షతే । — 5-82
18. న కేవలం యో మహతోఽపభాషతే
    శృణోతి తస్మాదపి యః స పాపభాక్। — 5-83
19. క్లేశః ఫలేన హి పునర్నవతాం విధత్తే। — 5-86

*****

## అనుబంధము-5

### श्रीः

# कुमारसम्भवमहाशिवपुराणयोः

## साम्यनिदर्शकः संदर्भः

### कुमारसंभवम्

**तथा समक्षं दहता मनोभवं**
**पिनाकिना भग्नमनोरथा सती ।**
**निनिन्द रूपं हृदयेन पार्वती**
**प्रियेषु सौभाग्यफला हि चारुता॥**
**इयेष सा कर्तुमवन्ध्यरूपता**
**समाधिमास्थाय तपोभिरात्मनः।**
**अवाप्यते वा कथमन्यथा द्वयं**
**तथाविधं प्रेम पतिश्च तादृशः।**

### महाशिवपुराणम्
(पार्वतीखण्डम्)

**निनिंद** च स्वरूपं सा हा हतास्मीत्यथाब्रवीत्।
सखीभिर्बोधिता चापि न बुबोध गिरींद्रजा ।
तिष्ठंति च सखीमध्ये न किंचित्सुखमाप ह ।
धिक्स्वरूपं मदीयं च तथा जन्म च कर्म च।

इति ब्रुवंती सततं स्मरंती हरचेष्टितम् ।
सुखं न लेभे किंचिद्वाऽब्रवीच्छिव शिवेति च ।

**पार्वत्युवाच —**
मातस्तप्तुं गमिष्यामि प्रातः प्राप्तुं महेश्वरम्।
अनुजानीहि मां गन्तुं तपसेऽद्य तपोवनम् ।

**ब्रह्मोवाच —**
इत्याकर्ण्य वचः पुत्र्या मेना दुःखमुपागता ।
सोपाहूय तदा पुत्रीमुवाच विकला सती ।

### कुमारसंभवम्

**निशम्य चैनां तपसे कृतोद्यमां**
**सुता गिरीशप्रतिसक्तमानसाम्।**





**उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् । मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः। पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः। इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात्। क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् । अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा। प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत्। विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् । बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधवि शीर्णसंहति । यदा फलं पूर्वतपः समाधिना न तावता लभ्यममंस्त काङ्क्षितम्।तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे। शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता**

### महाशिवपुराणम्

**मेनोवाच —**
दुःखितासि शिवे पुत्रि! तपस्तप्तुं पुरा यदि।
तपश्चर गृहेऽद्य त्वं न बहिर्गच्छ पार्वति!।
कुत्र यासि तपः कर्तुं देवाः संति गृहे मम।
तीर्थानि च समस्तानि क्षेत्राणि विविधानि च।
शरीरं कोमलं वत्से! तपस्तु कठिनं महत्।
एतस्मात्तु त्वया कार्यं तपोऽत्र न बहिर्व्रज।
स्त्रीणां तपोवनगतिर्न श्रुता कामनार्थिनी ।
तस्मात्त्वं पुत्रि! मा कार्षीस्तपोर्थं गमनं प्रति।
इत्येवं बहुधा पुत्री तन्मात्रा विनिवारिता ।
संवेदे न सुखं किंचिद्विनाराध्य महेश्वरम् ।
मातुराज्ञां च संप्राप्य सुव्रता मुनिसत्तम!। ततः स्वांते सुखं लेभे पार्वती स्मृतशंकरा । मातरं पितरं साथ प्रणिपत्य मुदा शिवा । सखीभ्यां च शिवं स्मृत्वा तपस्तप्तुं समुद्गता । हित्वा मतान्यनेकानि वस्त्राणि विविधानि च । वल्कलानि धृतान्याशु मौंजीं बद्ध्वा तु शोभनाम्। हित्वा हारं तथा चर्म मृगस्य परं धृतम् । जगाम तपसे तत्र गङ्गावतरणं प्रति। शम्भुना कुर्वता ध्यानं यत्र दग्धो मनोभवः। गङ्गावतरणो नाम प्रस्थो हिमवतः स च । वातश्चैव तथा शीतवृष्टिश्च विविधा तथा । दुःसहोऽपि तथा धर्मस्तया सेहे सुचित्तया ।

दुःखं च विविधं तत्र गणितं न तथा गतम्।

**सुमध्यमा। विजित्य नेत्रप्रति-
घातिनीं प्रभामनन्यदृष्टिः सविता
-रमैक्षत । तथातितप्तं सवितुर्गभ
-स्तिभिर्मुखं तदीयं कमलश्रियं
दधौ । अपाङ्गयोः केवलमस्य
दीर्घयोः शनैः शनैः श्यामिकया
कृतं पदम् । अयाचितोपस्थित-
मम्बु केवलं रसात्मकस्योडुपतेश्च
रश्मयः। बभूव तस्याःकिल
पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्त
-साधनः। निनाय सात्यन्तहिमो
-त्किरानिलाः सहस्यरात्रीरुदवा
सतत्परा । परस्पराक्रन्दिनि
चक्रवाकयोः पुरो वियुक्ते मिथुने
कृपावती । स्वयंविशीर्णद्रुमपर्ण
-वृत्तिता परा हि काष्ठा तपस -
स्तया पुनः। तदप्यपाकीर्ण मतः
प्रियंवदां वदन्त्यपर्णेति च तां
पुराविदः। मृणालिकापेलवमेव -
मादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्य
-हर्निशम् तपः शरीरैः कठिनै -
रूपार्जितं तपस्विनां दूरमध -
श्चकार सा ।**

**अथाजिनाषाढधरः प्रगल्भवा-
व्ज्वलन्निव ब्रह्ममयेन तेजसा ।**

केवलं मन आधाय शिवे सासीत्स्थिता मुने!
ततः पर्णान्यपि शिवा निरस्य हिमवत्सुता ।
निराहाराऽभवद्देवी तपश्चरणसंरता ।
अधोमुखी निर्विकारा जटावल्कलधारिणी ।
तथा तया तपस्तुप्तुं मुनीनामपि दुष्करम् ।

आहारे त्यक्तपर्णाऽभूद्यस्माद्धिमवतः सुता।
तेन देवैरपर्णेति कथिता नामतः शिवा ।
स्मृत्वा च पुरुषास्तत्र परमं विस्मयं गताः।
तत्तपोदर्शनार्थं हि समाजग्मुश्च तेऽखिलाः।
धन्यान्निजान्मन्यमाना जगदुश्चेति सम्मतः।
शृणु शैलसुते देवि! किमर्थं तप्यते तपः?
इच्छसि त्वं सुरं कं च किं फलं तद्वदाधुना।

**ब्रह्मोवाच —**

गतेषु तेषु मुनिषु स्वं लोकं शङ्करः स्वयम् ।
परीक्षितुं तपो देव्या ऐच्छत्सूतिकरः प्रभुः।





**विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ।**

**तमातिथेयी बहुमानपूर्वया
सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः।
विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम्।
उमां स पश्यन्नृजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः। अपि
क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते।
अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ।
कुले प्रसूतिः प्रथमस्य वेधसस्त्रि
-लोकसौन्दर्यमिवोदितं वपुः।
अमृग्यमैश्वर्यसुखं नवं वयस्तपः
फलं स्यात्किमतः परं वद ।
किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ।
इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम्।
अथो वयस्यां परिपार्श्ववर्तिनीं
विवर्तितानञ्जननेत्रमैक्षत ।**

परीक्षाच्छद्मना शम्भुर्द्रष्टुं तां तुष्टुमानसः।
जाटिलं रूपमास्थाय स ययौ पार्वतीवनम् ।
आगतं तं तदा दृष्ट्वा ब्राह्मणं तेजसाद्भुतम् ।
अपूजयच्छिवा देवी सर्वपूजोपहारकैः।
सुसत्कृतं संविधाभिः पूजितं परया मुदा ।
पार्वती कुशलं प्रीत्या पप्रच्छ द्विजमादरात्।

**पार्वत्युवाच —**

ब्रह्मचारिस्वरूपेण कस्त्वं हि कुत आगतः?
इदं वनं भासयसे वद वेदविदां वर! ।
अहमिच्छाभिगामी च वृद्धो विप्रतनुः सुधीः।
तपस्वी सुखदोऽन्येषामुपकारी न संशयः।
का त्वं कस्यासि तनया किमर्थं विजने वने?
तपश्चरसि दुर्धर्षं मुनिभिः प्रपदैरपि । न बाला
न च वृद्धासि तरुणी भासि शोभना । किं त्वं
वेदप्रसूर्लक्ष्मीः किं सुरूपा सरस्वती? एतासु
मध्ये का वा त्वं नाहं तर्कितुमुत्सहे ।

**पार्वत्युवाच —**

नाहं वेदप्रसूर्विप्र! न लक्ष्मीश्च सरस्वती ।
अहं हिमाचलसुता सांप्रतं नाम पार्वती ।

**जलिट उवाच —**

किमिच्छसि वरं देवि! प्रष्टुमिच्छाम्यतः परम्।
त्वय्येव तदसौ देवि! फलं सर्वं प्रदृश्यते ।
परार्थे च तपश्चेद्वै तिष्ठेत्तु तप एव तत् । रत्नं
हस्ते समादाय हित्वा काचस्तु संचितः। ईदृशं
तव सौन्दर्यं कथं व्यर्थीकृतं त्वया? हित्वा
वस्त्राण्यनेकानि चर्मादि च धृतं त्वया। तत्सर्वं
कारणं ब्रूहि तपसस्त्वस्य सत्यतः। तच्छ्रुत्वा
विप्रवर्योऽहं यथा हर्षवाप्नुयाम् ।

**सखी तदीया तमुवाच वर्णिनं निबोध साधो! त्व चेत्कुतूहलम्। यदर्थमम्भोजमिवोष्णवारणं कृतं तपस्साधनमेतया वपुः। इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशान वमत्य मानिनी । अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति । यथा श्रुतं वेदविदांवर! त्वया जनोऽयमुच्चैः पदलङ्घनोत्सुकः। तपः किलेदं तदवाप्तिसाधनं मनोरथानाम-गतिर्न विद्यते । अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।**

**ब्रह्मोवाच –**

इति पृष्टा तदा तेन सखीं प्रैरयताम्बिका।
तन्मुखेनैव तत्सर्वं कथयामास सुव्रता । तया
च प्रेरिता तत्र पार्वत्या विजयाभिधा ।
प्राण प्रिया सुव्रतज्ञा सखी जटिलमब्रवीत् ।

**सख्युवाच –**

शृणु साधो! प्रवक्ष्यामि पार्वतीचरितं परम् ।
हेतुं च तपसः सर्वं यदि त्वं श्रोतुमिच्छसि ।
सखी मे गिरिराजस्य सुतेयं हिमभूभृतः।
ख्याता वै पार्वतीनाम्ना सा कालीति च मेनया।
ऊढेयं न च केनापि न वांछति शिवात्परम् ।
हित्वेन्द्रप्रमुखान्देवान् हरिं ब्रह्माणमेव च ।
पतिं पिनाकपाणिं वै प्राप्तुमिच्छति पार्वती ।
मत्सखी चादरादेशात्तपस्तपति दारुणम् ।
मनोरथं कुतस्तस्या न फलिष्यति तापस ।
यत्ते पृष्टं द्विजश्रेष्ठ! मत्सख्या मनसीप्सितम्।
मयाख्यातं च तत्प्रीत्या किमन्यच्छ्रोतुमिच्छसि?

**जलिट उवाच –**

सख्येदं कथितं तत्र परिहासोऽनुमीयते ।
यथार्थं चेत्तदा देवी स्वमुखेनाभिभाषताम् ।

**ब्रह्मोवाच –**

इत्युक्ते च तदा तेन जटिलेन द्विजन्मना ।
उवाच पार्वती देवी स्वमुखेनैव तं द्विजम् ।

**पार्वत्युवाच –**

शृषु द्विजेन्द्र जटिल! मद्वृत्तं निखिलं खलु ।
सख्युक्तं मेऽद्य यत्सत्यं तत्तथैव न चान्यथा।
मनसा वचसा साक्षात्कर्मणा यतिभावतः।
सत्यं ब्रवीमि नोऽसत्यं वृतो वै शङ्करो मया।





**अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे । चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते। आलक्तकाङ्कानि पदानि पादयो-र्विकीर्णकेशासु परेतभूमिषु । अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि यत् । स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति। इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया । विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति । वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु। वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने। अवस्तु निर्बन्धपरे! कथं नु ते करोऽयमामुक्तविवागहकौतुकः। करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् । त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः। वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च।**

जानामि दुर्लभं वस्तु कथं प्राप्यं मया भवेत्।
तथापि मनऔत्सुक्यात्तप्यतेऽद्य तपो मया ।

**ब्राह्मण उवाच –**

एतावत्कालपर्यन्तं ममेच्छा महती ह्यभूत् ।
किं वस्तु कांक्षती देवी कुरुते सुमहत्तपः।
तज्ज्ञात्वा निखिलं देवि श्रुत्वा त्वन्मुखपङ्कजा।
इतो गच्छाम्यहं स्थानाद्यथेच्छसि तथा कुरु।
इत्युक्त्वा वचनं तस्य यावद्गन्तुमियेष सः।
तावच्च पार्वती देवी प्रणम्योवाच तं द्विजम् ।

**पार्वत्युवाच –**

किं गमिष्यसि विप्रेन्द्र! स्थितो भव हितं वद।

**द्विजोवाच –**

यदि श्रोतुमना देवि! मां स्थापयसि भक्तितः।
वदामि तत्त्वं सत्सर्वं येन ते वयुनं भवेत् ।
जानाम्यहं महादेवं सर्वथा गुरुधर्मतः। वृषध्वजो
महादेवो भस्मदिग्धो जटाधरः।
व्याघ्रचर्मांबरधरः संवीतो गजकृत्तिना ।
कपालधारी सर्पौघैः सर्वगात्रेषु वेष्टितः।
विषदिग्धोऽभक्ष्यभक्षो विरूपाक्षो बिभीषणः।
अव्यक्तजन्मा सततं गृहभोगविवर्जितः।
दिगम्बरो दशभुजो भूतप्रेतान्वितः सदा ।
क्व त्वं कमलपत्राक्षी क्वासौ वैष त्रिलोचनः।
शशांक्रवदना त्वं च पञ्चवक्त्रः शिवः स्मृतः।
चंदनं च त्वदीयांगे चिताभस्म शिवस्य च ।
क्व दुकूलं त्वदीयं वै शांकरं क्व गजाजिनम्।
क्व भूषणानि दिव्यानि क्व सर्पाः शङ्करस्य च।
भवत्याश्च शिवस्यैव न युक्तं रूपमुत्तमम्। यदि
द्रव्यं भवेत्तस्य कथं स्यात्स दिगम्बरः। वाहनं
च बलीवर्दः सामग्री कापि तस्य न। सहायाश्च
पिशाचा हि विषं कंठे हि दश्यते ।

